.

# अथ पटपद्धतिः

## ( आवश्यके शूद्रादीनां पुनर्भूविवाहविधिः ]

तत्र ज्योतिश्शास्त्रोक्तशुभदिने पतिवरा स्वाभिलषितं वरं देवरादिकं विधुरादिकमन्यं वा स्वाभीष्टं पवित्रचरितं पुरुषं फलपुष्पादिकमादाय मन्त्रपाठपूर्वकं ब्राह्मणद्वारा वृणुयात् मन्त्रः-

- **ॐतस्मिन्कालेऽग्निसान्निध्ये स्नातास्नाते ह्यरोगिणी। आत्मानं दास्यते सेति भोगार्थं स्वर्गसिद्धये** ॥
- इति मन्त्रेण फलपुष्पादिकं दत्त्वा ब्राह्मणद्वारा पतिं वृणुयात्।
- ततो वृतोऽस्मीत्युक्त्वा फलपुष्पादिकमादाय पुष्पाणि शिरस्याधाय फलं भक्षयेत् ।
- अथ कस्मिंश्चित्पर्वणि अन्यस्मिन् ज्योतिश्शास्त्रोक्त-शुभदिने वा गोमयाद्युपलिप्तभूमिविशेषे स्नातं वरं समुपवेश्य स्वयमपि स्नात्वा

आदि शङ्कर वैदिक विद्या संस्थान

दूरभाष: 9044016661

- नवीनवासांसि परिधाय भूषणालंकारादिनात्मानमलंकृत्य तत्समीपे समुपविश्य
- आचान्ता सा पतिवरा दक्षिणहस्तेन जलगन्धपुष्पैरपवित्रः पवित्रो वेत्यादिनात्मानं प्रासिंच्य
- वरपतिवरयोर्मङ्गलार्थं ब्राह्मणस्तावद्गणपति-षोडश-मातृकाः नवग्रहांश्च विधाय स्वस्त्ययनं कुर्यात् ।
- ततः पतिवरा जलाक्षतादिकमादाय-
- **ॐ अद्य तत्सदित्यादि देशकालौ संकीर्त्य अमुकगोत्राऽमुकदेवी स्ववरणीयपतिसमन्विताय मम समस्तदुःखशोक- प्रत्यूहसमुदाय-प्रध्वंसपूर्वकैहिका-मुष्मिक- सर्वाभीष्टसाधनाय स्वशरीर-प्रदानमहं करिष्ये** ।
- इति प्रतिज्ञाय पुनर्जलादिकमादाय तन्निर्विघ्नसमाप्ति हेतवे श्रीगणपतिप्रभृति-मातृनवग्रहपूजनमहं करिष्ये । इति पठित्वोत्सृजेत् ॥
- ततो वरः-**-ॐअद्येत्यादिदेशकालौ संकीर्त्य अमुकगोत्रो - ऽमुकवर्मा परपूर्वभार्याङ्गसङ्गज- पापाभावपूर्वक-**

**स्वर्गजनक -धर्माविरुद्धभोगसुखावाप्तये शास्त्रविधिना पुनर्भूस्वीकरणमहं करिष्ये। तन्निर्विघ्नपरिसमाप्ति-कामो श्रीगणेशमातृकानवग्रहकुम्भपूजनमहं करिष्ये ।**

- इति प्रतिज्ञासंकल्पं विधाय श्रीगणपत्यादीन्सम्पूज्य स्वेष्टदेवतां कुलदेवताश्च पूजयेत् ।
- ततो वरेण वध्वर्चा वध्वा च वरार्चा मालापादवन्दनादिभिः शब्दैरुचितैः कुलरीत्यनुसारं च कुर्यात् ।।
- एवमुभयतः सम्पूजने कृते पतिवरा वरस्य चरणो प्रक्षाल्य प्राङ्मुखी वराभिमुखी वा भूत्वा प्रार्थयेत्-
- **त्वं विष्णुः कमलाकान्तः साक्षादव्यय ईश्वरः ।**

  **तुभ्यमात्मप्रदानेनाऽऽवां भवतामपापिनौ ।।**
- **धर्मः सत्यं तपः सत्यं सत्यं शास्त्रं तवाज्ञया।**

  **तेन सत्येन देवेश न भवेत्पापमावयोः ॥**
- इति सम्प्रार्थ्य सा मङ्गलसूत्रं वरस्य करे बद्ध्वा गन्धं तस्य ललाटे कृत्वा पुष्पमालां च गले परिधाप्य

नमस्कुर्यात् ।

- अद्य प्रभृति तव दासी भवामीति ब्रूयात् ।
- अथ वामकरं स्वहृदये न्यस्य दक्षिणहस्तेन जलगन्धादीन्यादाय
- **ॐ अद्येत्यादि देशकालो सङ्कीर्त्य अमुकगोत्राऽमुकदेवी पतित्यक्ता वा बालविधवात्वप्रदापकानेकजन्मार्जितदुरित-. पुञ्ज-निवृत्तिपूर्वक-स्वधव-संयुत निरतिशयानन्दरूप-मुक्तिलब्धये इमं भौतिकं स्वीयं कलेवरं अभयदैवतकं त्वदुपभोगार्थं अमुकगोत्रायऽमुकनाम्ने वराय तुभ्यमहं सम्प्रददे** ।
- ॐ स्वस्तीति वरः प्रतिवदेत् ।
- ततः प्रतिग्रहीता तस्याः हृदयं स्पृशेत् स्वीयेन दक्षिणहस्तेन ।
- ततः उपस्थितपुरुषैः सहाग्निस्थापनं कुशकंडिकापूर्वकं विधाय तत्र स्वेष्टव्याहृति-ग्रहदेवताकुलदेवतामन्त्रैर्जुहुयात् ।

- ततः स्विष्टकृदाहुतिं पूर्णाहुतिं च दत्त्वा त्र्यायुषं कुर्यात्।
- ततो वरः पतिवराय सुन्दरपरिधानवस्त्राणि दद्यात् भूषणश्च भूषयेत् ।
- अथ पट्टवस्त्रं कौशेयं वा वरो गृहीत्वा मन्त्रं पठेत् -
- **शरीरावरणं वासो लज्जायाः करणं परं ।**

  **लज्जायास्ते सुखायाहं क्षिपाम्येतत् तवोपरि।**
  - इति मन्त्रण पतिवरोपरि विस्तीयं क्षिपेत् । पतिम्वराच तद्वस्त्रेणात्मनः अङ्गानि आच्छाद्याग्नि प्रणमेत् ।
  - वरं प्रणमेत् ।
  - दिवासूर्य रात्री अरुन्धती प्रणमेत् ।
  - ततः परस्परं हस्तग्रहणं तत्र मन्त्रः-
  - हस्ते गृह्णीव परस्पर ग्राहयाम उपस्थितैः।

    **वरं सम्पादयामोऽभीष्टं पटपाठसुखाय च ।।**

आदि शङ्कर वैदिक विद्या संस्थान

दूरभाष: 9044016661

**पुत्रपौत्रादिविवृद्ध्यर्थं दम्पती वाससुखाय च।**

**एष नः पटपाठोऽपि पूर्वेषां सुसुखाय च ॥**

**वह्नि प्रदक्षिणीकुर्मः प्रतिपादं सुखाय नः ।**

**कामाग्निः शोभनो भूयात् कामो देवः प्रसीदतु ॥**

- इत्यनेन पतिवरा वरेण सहाग्नि एकवारं प्रदक्षिणीकृत्य संस्रवं प्राश्याचम्य पुरोधसे संकल्प्य दक्षिणां दद्यात् ।
- ततो वरः किञ्चित् भक्ष्यद्रव्यमादाय ग्रासान् प्रतिमन्त्रान्ते पतिवराय भोजयेत् ।
- अथ मन्त्राः

**प्राणैस्ते प्राणान् सन्दधामि ॥ १॥**

**अस्थिभिरस्थीनि सन्दधामि ।। २ ॥**

**त्वचा ते त्वचं सन्दधामि ॥३॥**

**मांसैस्ते मांसान् सन्दधामि ॥ ४ ॥**

**मम वाचमेकमना जुषस्व ॥ ५ ॥**

**ॐ सर्व भूताधिवासः श्रीविष्णुरीशः सनातनः ।**

आदि शङ्कर वैदिक विद्या संस्थान

दूरभाष: 9044016661

**सन्तुष्टोऽनेन यागेन सिन्धौ पापमुपक्षिपेत् ।**

- इति सम्प्रार्थ्य ब्राह्मणेभ्य आशीर्वचनपूर्वकं प्रसादमादाय यथासुखं विहरेत् ।

## इति पुनर्भूविधानम् ॥

-